कामरसिकः कामेषु विषयेषु रसिकः निपुणः । क्षणं वित्तैर्द्रव्यैर्हीनः दरिद्रः । क्षणमपि च परिपूर्णविभवः । पश्चात् जरया जीर्णैः अंगैः वलीमण्डिततनुः वलीभिर्मंडिता आक्रांता तनुर्यस्य । नरः संसारांते मरणसमये यमधानीजवनिकां यमस्य धानीं पुरीं प्रविशति । यथा नटः नानावेषान् दधाति । तथाऽयं प्राणी नानावस्थां दधाति । शिखरिणी वृत्तम् ॥ ११० ॥

(भा०टी०) यह मनुष्य क्षणमें बालरूप और क्षणमें युवा हो रसिक कामरूप, क्षणमें दरिद्र, क्षणमें धनाढ्य, क्षणमें बुढ़ापेवाला कि जिसमें वृद्धापनसे अंगजीर्ण हो जाते धन ले बाल सिकुडे चमडे ऐसे रूपदिखाकर फिर नट बहुरूपिएकी नाईं यमराजके नगररूपी ओटमें छिप जाता है ॥ ११० ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यांति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ १११ ॥

(सं०टी०) पुण्यारण्ये शिवशिवेति प्रलपतः पुरुषस्य समदृष्टित्वमाह—अहाविति । अहौ सर्पे, हारे मुक्ताफलहारे वा । बलवति रिपौ शत्रौ, सुहृदि हितकरे वा । मणौ वा लोष्ठे मृत्पिंडे पाषाणे । वा कुसुमशयने पुष्पशय्यायां, दृषदि पाषाणे वा । तृणे स्त्रैणे अपत्ये वा इत्यादिषु मम समा दृष्टिर्यस्य समदृशः । दिवसाः कदा यांति गच्छंति । किंभूतस्य मम, क्वचित् कुत्रचित् पुण्यारण्ये स्थित्वा शिवेति नामावलिं प्रलपतः उच्चैः आक्रोशेन वदतः । शिखरिणी वृत्तम् ॥ १११ ॥

(भा०टी०) सर्प वा हार, बलवान् शत्रु वा मित्र, मणि और पाषाण, पुष्परचित शय्या वा पत्थरकी चट्टान, तृण वा स्त्रियोंके समूहमें समदर्शी होकर कहीं पवित्रबनमें 'शिव शिव शिव' इसप्रकार जपते हमारे दिन व्यतीत हों यही चाहता हूं ॥ १११ ॥

॥ इति श्रीभर्तृहरिकृतं वैराग्यशतकं सटीकं संपूर्णम् ॥